


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ० प्र०) भारतम्

संपुटः ८ | 15 MAY 1970 | क्रमांकः ६



साधारण-ज्येष्ठांकः] शकवर्षः १८९२ [मूल्यम् ४० पैसाः

# विषयसूची










# वदन्तु संस्कृतम्



लिखन्तु संस्कृतं सदा पठन्तु संस्कृतम्
वदन्तु संस्कृतं जना धरन्तु संस्कृतम् ॥

जनौ च नामकीर्तने सदा हि संस्कृतम्
गृहे च देवपूजने च ब्रूहि संस्कृतम्,
शुभाशुभेषु कर्मसु स्फुट हि संस्कृतम्
विवाहमुख्यकर्मसु धृतं हि संस्कृतम् ॥
सदैव देशभाषणे स्थितं हि संस्कृतम्
सतां च प्रौढभाषणे हितं हि संस्कृतम् ॥
स्वभारतीयताभिरक्षकं हि संस्कृतम्
प्रपञ्चमानवैस्सदा स्तुतं हि संस्कृतम् ॥
अनश्वरश्रुतिस्मृतिप्रबोधि संस्कृतम्
अनश्वरेश्वरस्वरूपदर्शि संस्कृतम्,
लिखन्तु संस्कृतं सदा पठन्तु संस्कृतम्
वदन्तु संस्कृतं जना धरन्तु संस्कृतम् ॥

---

# सम्पादकीयम्

## हत्याकाण्डाः

---

भारतेद्य श्रूयते दैनिकवार्तापत्रेभ्यः प्रतिदिनं प्रभाते यन्त्रक्सलैटैः तत्र भूस्वामी हतः, अत्र गृहस्वामी हतः, अपरत्र धनस्वामीति। इदमेवासीत्सुप्रभातमस्माकम् अथवा दुष्प्रभातम्। आकाशवाणीवाणीषु च एतादृश्य एव मानवहत्याः आलप्यन्ते।

किं प्रभुत्वम् एता वार्ता न शृणोति, न पश्यति, अथवा पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोति ? अथवा शृणोति पश्यति न सदृशं चेष्टते। बहुत्र हन्तकानां निरोधे नियुक्ताः आरक्षिणः मृताः आरक्षिणां स्थानानि च आततायिभिः लुण्ठितानि। तथापि सर्वकारः मौनम् मेषम् च गणयतीति महदाश्चर्यम्। हन्तकाश्च संघबद्धाः निश्चितकार्यक्रमाः अग्रे सरन्ति। कुत्रचिच्च प्रथममेव वध्यं चेतयित्वैव घ्नन्ति। आगताश्च ते नलिकाभिः स्फोटैः खड्गैर्भल्लैस्सह तैलयानकेष्वपि आयान्ति; स्वाभीष्टसिद्धयनन्तरं अन्तर्दधति च। तदा तदा संघीभूताः स्वविप्लवनिनादान् घोषयन्तः उत्सवयात्रामारचयन्ति च वीथीषु।

एवं दिवारात्रं निर्णीतपथकानुगुणम् चौर्यहत्यादिकम् निर्वहत्स्वपि हन्तकेषु सर्वकारः आलोचनानिमग्नो भवति, अण्वपि दण्डं न प्रसारयतीति महदाश्चर्यम्। इदं महत्तममाश्चर्यं यद्देतद्दण्डने उपदेशका धाराः भारत-

शासने नैतावत्पर्यन्तं सन्तीति, तदर्थं च पृथग्धाराणां सर्जनमावश्यकमिति च प्रकाश्यते। इदमप्यत्याश्चर्यं दोषिणां निरोधाय आरक्षकैः सैनिकैर्वा लाभमादातुं न प्रयत्यते अपितु तन्निरोधाय स्थानिकरक्षणसंधानां प्रकल्पनाय यत्न आस्थीयते। यद्यपि स्थानिकसंरक्षकसंधानां स्थापनमुचितमेव तथापि तेषां करे आयुधाभावे, स्थितस्य वा आयुधस्य उपयोगानभिज्ञत्वे किं प्रयोजनम्? तेषामेव चायुधदानम् इतोपि च महाप्रमादकरम् भविष्यति नूनम्। यथाकथञ्चिदपि सर्वकारः प्रजारक्षणधर्मादपसर्तुं नैव यतेत, अपितु धनप्राणव्ययेनापि दुष्टान्निराकुर्यात्। आंग्लप्रभुतायाः प्रारम्भे वर्तमाना भिल्लादय आततायिनः कथं विगृहीताः, कथं च निष्कण्टक आरचितो देश इति चरितपृष्टानि परिवर्तयेयुः।

अयमपर आत्मविनाशील उद्यमः यद् भूस्वामिनां क्षेत्राणां प्रजासु विभजनेन, धनिनां धनस्य तथा विभजनेन च अस्य उद्यमस्य निर्मूलनप्रयत्न इति। तथा सति सर्वे च प्रयत्नहीना आततायिनः विप्लवकारिणः अलसा देशदौर्भाग्यवर्धका एव समुत्तिष्ठेयुः। इदमधुनैव आश्रूयते यदधिकोशानां आयत्तीकरणान्निर्धनानां ऋणदानाच्च क्रमशः अधिकोशा अमामधुकोशास्संभविष्यन्तीति। अधमर्णानां प्रत्यर्पणाभावे कियन्तं कालं वा अधिकोशाः जीवेयुः। ऋणिसकाशाद्दण्डनाय तु न सौविध्यमस्ति तेषाम्। स्वतो दरिद्राणां पलायनपराणां मानहीनानां वञ्चकानां सकाशादृणदण्डनं असाध्यमेव खलु।

अपि च आततायिभीत्या क्षेत्रधनादिविभाजनशासनमनुस्मरतो मे भारतकथा काचित्स्फुरति —

कदाचित् नारदः नरलोकमागत्य शाल्मलीवृक्षसकाशमयात्। स च वृक्षः नारदं समपूजयत्। नारदश्च कथानुकथनेन शाल्मलीवृक्षं अस्तावीत् "त्वं महोन्नतः महाबलः बहुप्राणिनामाधारः। अपितु वायुर्महाबल इति स्वनाम प्रकाश्य वृथा गर्वं वहती"ति। शाल्मलीतरुश्च नारदवर्णितमात्म-प्रभावं सत्यं संभाव्य वायुं तिरस्कुर्वन् यत्किंचिदवोचत्। स कलहभुक् वायुमुपगम्य शाल्मल्या गर्वकारणमवोचत्। स च वायुर्महाबलः आत्मबलं श्वः प्रदर्शयिष्यामीति अगर्जत्। स एव नारदः पुनश्शाल्मलीतरुमुपगम्य वायोर्ज्ञातं भयं विशदीचकार। तरुश्च वायुप्रकोपाद्भीतः नारदमेव आपन्निवारणोपायं बोधयितुमयाचत। तदा नारदः "हे तरो! शाखानां बाहुल्ये वायुस्त्वां सुखं पातयिष्यति। यदि शाखारहितस्तिष्ठेः तदा स त्वां किमपि कर्तुं न शक्नुया"दिति उपादिशत्।

गते तु नारदे स तरुः स्वशाखाः त्रोटयित्वा प्रकाण्डमात्रः युद्धाय सन्नद्धोऽभवत्।

अथ वायुश्च प्रभूतप्रभात एव सन्नद्धस्सन् तरून्मूलनाय आजगाम। परन्तु स तं वृक्षं चालयितुमपि न शशाक। अथ कोपाविष्ट स्स वायुः स्वनामसार्थकयन् पर्वतानपि चालयन् प्रसभमवात्। सर्वे वृक्षाः कुट्यः महाप्रासादशिखराणि च भग्नोद्धूतानि, परन्तु शाल्मलीतरुश्च निश्चल-स्तथैवातिष्ठत्। तदा श्रान्तो वायुः स्वकोणमगात् लज्जया। नारदश्च वायुमुपेत्य परिजहास।

एवमेव स्वत्वपरित्यागादमीतिरावेश्या इत्युद्बोधनं तु परिदृश्यते। गृहदाहे समुत्पन्ने परितः अग्निं प्रज्वाल्य शीघ्रमेव इन्धनक्षयादग्नि-

(शिष्टम् ९ पुष्ठे)

# पदार्थविज्ञानसारः

[पूर्वानुबन्धः]

---

शिष्यः - यो वायुः समुद्रात् भूमेर्वा निर्गत्य वहति तत्कारणम् किम् ?

गुरुः - समुद्रसमीपस्थानि यानि स्थानानि तेषु ये स्थिरवायवः ते दिवसाभ्यन्तरे सामुद्रस्थिरवाय्वपेक्षया उष्णा विस्तारिताश्च भवन्ति । अतः कारणात् तत्समीरणस्तत्र भूमौ वहति । अतोऽनेन लवणीयवायुर्जायते । रात्रिकाले च गुरुतरस्थिरवायुर्यः पर्वतोपरि वर्तते स हि निम्नप्रदेशे पतेत् । स हि सामुद्रस्थिर-वायौ प्रविशति । तेन च भौमवायुर्जायते ।

शिष्यः वायुविशेषस्य के के गुणाः संति ?

गुरुः - देशविशेषीयवायोर्गुणविशेषाः संति । तथाचास्मिन् वङ्गदेशे दक्षिणवायुर्मध्यमः, उत्तरीयवायुः सुशीतलः, पूर्ववायुश्च रोगदायकः, पश्चिमवायुरत्युष्णो रूक्षश्चेति ।

शिष्यः - एतेषां गुणानां किमिह कारणम् ?

गुरुः - दक्षिणवायुर्यन्मध्यमस्तत्रैतत् कारणम् । यतो दक्षिणमहासागरा दायाति । उत्तरीयवायुर्यत् शीतलः तत्रैतत् कारणम् यतो हिम-सागरतः, किं वा ईषत्सूर्यरश्मिकहिमालयप्रदेशादायाति । पूर्व-वायुर्यद्रोगदायी तत्रैतद्बीजम् यतः सुन्दराख्यमहावनान्तरा-दायाति । पश्चिमवायुर्यदुष्णो रूक्षश्च तत्रैतत् कारणम् यतोत्युष्ण-रूक्षभूम्यन्तरादायाति ।

शिष्यः - कथं निर्घातवायुर्भवति ?

गुरुः - बलवन्तौ द्वौ समीरणौ यदा परस्परं सम्मुखवर्तिनौ परस्पराहतौ च स्याताम् अथवा हठात् स्थिरवायौ विस्तारिते भूते निर्घातो जायते, एवं महती झम्भराप्यनेन प्रकारेण भवति ।

शिष्यः - किं तावद्बाष्पं मेघो वा ?

गुरुः - बाष्पमतिसूक्ष्ममदृश्यम् च । अर्थाज्जलीयपरमाणुर्यश्चाकाशे समुत्तिष्ठति यदा च संभूय संकीर्णस्संदृश्यो भवति तदा मेघ इत्यभिधीयते ।

शिष्यः - बाष्पमिदं कस्मादुत्तिष्ठति ?

गुरुः - दिनकरकरसंतापवशात् पृथिव्या उत्थितं सत् लघुतया गगन-मण्डले तिष्ठेत् ।

शिष्यः - तस्याकाशमण्डलावस्थाने किं फलम् ?

गुरुः - यदा स्थिरवायुरुष्णो भवति तदा तं शीतलत्वं नयति । यदा च स्वयं संकीर्णीभूय मेघो भवति तदास्माकं छायां वितनोति । एवं पृथिव्या उष्णतां वारयति येन च मृत्तिका न स्फुटति । एवं महोपकारिणीं वृष्टिं जनयति ।

शिष्यः - बाष्पतः किं लोकानां हानिर्जायते ?

गुरुः - समयविशेषे हानिर्भवितुमर्हति यतः सर्वैः प्राय एवमनुमीयते, यत्तस्मादेव भूकम्पो जायते । तदनुमानबीजं पृथिव्या अभ्यन्तरे लवणविशेषगन्धकमयं बाष्पं वर्तते । यदा तस्मिन् बाष्पे स्फुलिंगः प्रविशति तदा ज्वलित्वा तस्मिन् प्रचलिते भूकम्पो भवति । कदाचिद्वा पृथिव्या अन्तर्गतवायुस्तदीयबाष्पं वा विसारि सत् भूकम्पं जनयेत् ।

शिष्यः - ऊर्ध्वे कियद्दूरं मेघा उत्तिष्ठन्ति ।

गुरुः - पृथिव्या ऊर्ध्वमर्धक्रोशमारभ्य क्रोशद्वयपर्यन्तमुत्तिष्ठन्ति ।

शिष्यः - मेघानां मध्ये यन्नानावर्णा नानावयवाश्च दृश्यन्ते तत्कारणं किं ?

गुरुः - ते च वर्णाः सूर्यकिरणेभ्य उत्पद्यन्ते । मेघा यदा निबिडाः सूर्यसन्निधिवर्तिनश्च भवन्ति तदा वर्णविशेषा जायन्ते । एवं वायुना ते यदा विचलिता भवन्ति तदा नानाकृतयोऽपि दृश्यन्ते ।

शिष्यः - प्रायः संततमेवाकाशं यन्नीलवर्णाभं दृश्यते तत्कारणम् किम् ?

गुरुः - तदेतत् कारणम् यद्बाष्पमध्ये वायुर्विद्यते । तेन हेतुना सर्वेभ्यो वर्णेभ्यः सूर्यकिरणस्य नीलसमत्वं प्रकाशते ।

शिष्यः - वृष्टेः कारणम् किम् ?

गुरुः - यदा बाष्पैर्वायुरीदृक् पूर्णो भवति, यदान्यत् किमपि धारयितुं न शक्नोति, तदा संभूय कृत्स्नं बाष्पं स्वस्य गुरुत्वेन कणिकाकारैः पतेत्, तस्याख्या वृष्टिरिति । कणिकारूपेण वृष्टेः पतने परमेश्वरस्य कीदृशी अभिज्ञता प्रकाशते । यदि मुसलधारया वृष्टिः पतेत् तदा पृथ्वी प्रणश्येत् । विशेषतस्तु वृक्षगुल्मलतादीनां मूलगतमृण्णिचयधौतेन वृक्षादयः प्रणष्टास्स्युरित्यनेन रूपेण जगतां महती हानिर्जायेत ।

शिष्यः - वृष्टयः पृथ्वीमिमां सफलां कुर्वन्ति । म्लानीभूतानि सस्यानि च पुनरम्लानयन्ति । ग्रीष्मे चोत्तप्तान् वायून् शीतलतां नयन्ति, एवं नदीनदादीनुत्पादयन्ति येभ्यः क्वचिन्न जलाभावो भवति ।

शिष्यः - वृष्टेः प्रभवे किमपि लक्षणमस्ति ?

गुरुः - तत्र नानाचिह्नानि संति। यतः समीरणपक्षिपुष्पादिभ्यो वृष्टेरागमनं निर्णीयते।

शिष्यः - वत्सरमध्ये पृथिव्यां कियती वृष्टिर्जायते ?

गुरुः - प्रायस्तूच्चैः शतयवपरिमाणेन पृथिव्यां वृष्टिर्जायते ।

शिष्यः - वत्सराभ्यन्तरे पृथिवीतो बाष्पाकारेणोर्ध्वे कियज्जलमुत्तिष्ठति ।

शिष्यः - त्रयोविंशत्यधिकशतसंख्यकयवविशेषपरिमाणेन जलमुत्तिष्ठति ।

शिष्यः- शक्रधनुः कस्मादुत्पद्यते ?

गुरुः - यदा वृष्टिः पतति तदा तत् कणिकासु सूर्यरश्मयो लगन्ति, तस्मादेव धनुराकृतिर्दृश्यते ।

शिष्यः- तस्य धनुषो नानावर्णाः कस्मादुत्पद्यन्ते।

गुरुः - सूर्यकिरणैरुत्पद्यन्ते । यासु जलकणिकासु सूर्यरश्मयः प्रविश्य अधिकं निर्गच्छन्ति, ता नीलवर्णा दृश्यन्ते। अनेन च कणिका नानावर्णा जायन्ते ।

शिष्यः - शीतं हिमं च केन प्रकारेण समागच्छति ?

गुरुः – शीतं हिमं च नानासमयेषु समीरणादुत्पद्य समायाति। विशेषस्तु दक्षिणोत्तरकेन्द्राभ्यां विचलिते वायौ तदुभयमधिकं भवति । अपरं च यदा वायुर्वहति तदा शीतहिमे संभवतः ।

शिष्यः- हिमानी केन जायते ?

गुरुः - शीताधिक्येन जायते। यतः शीतेन जलं संकीर्णं कृत्वा कठिनत्वं नीयते।

(सशेषम्)

(संपादकीयस्य ४ पृष्ठात् शेषः)

निर्वापणमिव आततायिषूद्यतेषु सर्वस्वं तेभ्यस्समर्प्य निर्भयमवस्थातव्य-मिति प्रजाप्रबोधः प्रतिभाति ।

आततायिनमायान्तं हन्यादेवाविचारयन्निति हि नीतिः । वृश्चिकस्य सर्पस्य वा अभिमुखीभावे अहिंसाशास्त्रस्य पठनं नहि तत्र युज्यते ।

आततायिनामुपेक्षणं वशंगतानां वा तेषां कारायां सकलसौकर्यैः परिपोषणं, व्यर्थैर्व्याजैः विमोचनम्, अथवा पलायनसौविध्यापादनम्, पुनस्तदन्वेषणमिति महती अनर्थपरम्परा । देशद्रोहिणां प्रजाद्रोहिणां तेषा-मुपेक्षा च "प्रक्षिप्योदर्चिषं कक्षे शेरते तेभिमारुत" मिति रीत्या अपाय-कारिणी समुदपद्यत ।

साम्यवादः न कदापि स्वकुक्षिं प्रपूर्य तृप्येत, किन्तु "न जातु कामः कामानामुपभोगेन शाम्यति, हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इतिवत् सर्वध्वंसेनैव पूरितो भवेत् ।

सर्वेत्र सुखिनस्सन्तु सर्वे सन्तु निरामयाः,
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात् ॥

---



# वीक्षामहे चन्द्रयानकम

महाक्षेपणीमंडितं सर्वसहापृष्टतश्चोदितम्
महावेगपरिधावितं महाभ्रश्वभ्रपरिभ्रमम,
रक्षासर्वस्वकुक्षिकं गतिरूक्षध्वनिविलक्षणम
वीक्षामहे चन्द्रयानकं ऊर्ध्वकक्ष्यास्तरत् स्फुरद्रुचिकम ॥

दूरदृष्टिदूरश्रवणयुतं पारदर्शकमपाराभ्रतारकम्
महोष्णसहिष्णुकं अभीक्ष्णकामचरम्,
प्राणवायुपरिपूरितं प्राणापायविनिवारकम
वीक्षामहे चन्द्रयानकमूर्ध्वकक्ष्यास्तरत् स्फुरद्रुचिकम् ॥

चन्द्रमंचकमनाथितं धृतचन्द्रोत्पातनसाधनम्
सांकेतिकयन्त्रनियन्त्रितं सन्क्रांन्तमहाभियानकम्,
लोकालोकदूरालोकं लोकालोकदुरालोकम्
वीक्षामहे चन्द्रयानकमूर्ध्वकक्ष्यास्तरत् स्फुरद्रुचिकम् ॥

# सुलभपाठमाला ४४

## वृक्षाः ७

## जम्बीरः, नारंगः, मादीफली च



जम्बीरः नात्युन्नतः नातिह्रस्वः वृक्षः । अस्य पत्राणि किंचिद्दीर्घाणि वर्तुलानि भवन्ति । शाखासु तत्र तत्र कण्टका भवन्ति विरलाः । अयं वृक्षः शुष्कभूमौ वर्धते जलं च काममपेक्षते । अस्य फलानि प्रथमतः श्यामानि कषायरसानि भवन्ति । प्रौढत्वे च हारिद्रावर्णानि आम्लरसवन्ति च भवन्ति । तेषां द्रवः अतीवाम्लः आहारे औषधेषु चोपयुज्यते । फलानि च लघूनि गोलिकापरिमाणानि बृहन्ति च अण्डपरिमाणानि भवन्ति । फलस्य द्वेधा खण्डने चान्तः भित्तिविभागाः संदृश्यन्ते तेषु च भागेषु लघूनि बीजानि तत्परितः आम्लद्रवपूरिता पेश्यश्च निबिडा भवन्ति । द्रवपेशीनां भञ्जन एव द्रवः बहिः निर्याति, अन्यथा फलपुटे एव तिष्टति । अत एव जम्बीरद्रवनिस्सारकाः प्रथमं फलं हस्तेन सम्यक् सम्मर्द्य अनन्तरं द्विधा खण्डयन्ति । तेन च पूर्वमेव शिथिलितपेशीभ्यः बहिर्गतः फले पूरितश्च तद्रवः फलखण्डनानुपदमेव स्वयं बहिर्निस्सरति ।

खण्डनात्प्राक् फलमर्दनाचारस्य अन्यदपि कारणं वदन्ति विज्ञाः । पुरा परीक्षिन्महाराजदर्शनाय आयन् कश्चिद् ब्राह्मणः मार्गगतवृक्षात्किंचन जंबीरफलमाहृत्यानीय राज्ञे समार्पयत् । राजा च तद् गृहीत्वा अजिघ्रत् । तत्क्षण एव तत्र सूक्ष्मरूपेणावस्थितः तक्षकः तमदशत् येन स मृतः । तस्मात् जम्बीरफलं हस्तेन सम्यक् मर्दयित्वैव उपयुज्येतेति ।

जंबीरद्रवश्च पित्तनाशक उष्णशामकः रक्तवृद्धिदः जिह्वादोषनिवारकः हितकरः बलप्रदश्च वर्तते । ग्रीष्मकाले त्वेतद्द्रवोपयोगः

मनुजानां हितकरो भवति। यद्यप्ययं श्लेष्माणमुद्दीपयिष्यति तथापि मरिचादिसंयोजनेन स दोषः निवर्त्येत। अथापि अयं वर्षासु अहितो भवति जनानाम्। रोगिणां पथ्यविधाने तिन्त्रिणीफलस्थाने एतद्रवः आदिश्यते येन औषधगुणोभिवर्धते रक्तवृद्धिश्च भवति।

इदं फलं सुरक्षितं मासावधि अपर्युषितमुपयोगार्हं भवेत्। अपि चेदं दिनेष्वतीतेषु शुष्कमेव भवेन्न पर्युषितम्।

अथ नारंगोपि जंबीरजातीय एव। एतत्फलं तु नारिकेलवत् वृक्षे भवति। अन्तश्च एतत्फलस्य नवैकादश वा कोशाः पृथगनुसंहिता भवन्ति। एकैककोशे द्रवपेश्यः बीजानि च भवन्ति। बीजानि दूरीकृत्य पेशीगुच्छं भक्षयन्ति। केचिच्च यन्त्रेण द्रवं निस्सार्य पिबन्ति। एतेषां च रसः क्वचिन्मधुरः क्वचिदम्लः अनुभूयते। नारंगेषु असंख्याका भेदा वर्तन्ते। एतज्जातावेव कमलाफलमिति प्रसिद्धं फलं भारतदेशे अतीव विस्तृततया विक्रीयते। तच्च अरुणत्वक्कम् अरुणकोशकम् च मधुरम् भवति।

मादीफलम् तु स्थूलत्वक्कम् अल्पसारकम् तिक्तकषायरसकम् औषधकर्मण्युपयुज्यते। महापित्तहरमिदम् आयुर्वेदे प्रथितम् किल।

जंबीरफलैः नारंगशलाटुभिः मादीफलैश्च उपदंशं निर्मान्ति गृहिण्यः यः खलु आवत्सरं सुरक्षित उपयुज्यते।

जंबीरफलानि नारंगफलानि कमलाफलानि च खण्डान्तरेभ्यः प्रहीयन्ते येन भारतसर्वकारस्य कोशः आपूर्यते विदेशनाणकैः।

---

## सौम्यवत्सरोत्तरायण परीक्षासु सर्वप्रथमतया उत्तीर्णाः

परिचयः



वा. आर. रमा
त्यागरायनगर

अभिज्ञः



एस्. पद्मावती
तिरुनगर

विचक्षणः



टि. एस. तांडवमूर्तिः
मदुरै

समर्थः



एस. कृष्णमूर्तिः
मदुरै

सर्वप्रथमतया उत्तीर्णान् विद्यार्थिनः, एतादृश-योग्यताप्राप्त्यनुगुणं शिक्षणप्रदातॄन् तदुपाध्यायांश्च प्रीतिपूर्वकमभिनन्दामहे । अपि च मदुरै केन्द्रस्थाभ्यामेव द्वाभ्यां विचक्षणसमर्थाभ्यर्थिभ्यां सर्वप्रथमभावो लब्ध इति ते च तौ च विशेषेण अभिनन्दनार्हाः ।

इति

सं. भा. प्र. सभा, चित्तूरु. | की. श्रीनिवासाचार्यः परीक्षामन्त्री



## कोविदपरीक्षां

उत्तीर्य

संस्कृतपंडितपदवीं निर्वहत !



एतत्समीया कोविदपरीक्षा आंध्रसर्वकारेण उपाध्यायत्व-योग्या अंगीकृता । अतः तत्र उत्तीर्य पंडिता भवत ।

इति

ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री.

# श्रीत्रिविक्रमानन्दस्तोत्रम्

लेखकः - बाळशास्त्री राजजोशी
"संस्कृत कोविदः"
दोरनहळ्ळि



सच्चिदानन्दसंपूर्णं द्वैतवस्तु विवर्जितम् ।
ब्रह्मात्मान स्वयभासं त्रिविक्रममहं भजे ॥ ॥ १ ॥

अविलिप्तं असंगं च परिशुद्धं सनातनम् ।
क्रियाद्वैतं चिदात्मानं त्रिविक्रममहं भजे ॥ ॥ २ ॥

प्रमातीतं गुणातीतं भेददं तं सुखावहम् ।
सद्योजातं शिवद्वैतं त्रिविक्रममहं भजे ॥ ॥ ३ ॥

निर्लेपं परमानन्दं निरस्तसकलाप्रियम् ।
योगिराजं महात्मानं त्रिविक्रममहं भजे ॥ ॥ ४ ॥

गुरुनाथं कलापूर्णं सर्वपातकमोचकम् ।
सदानन्दं सत्यरूपं त्रिविक्रममहं भजे ॥ ॥ ५ ॥

——:o:——

Estd. 1945 वाणीं भजत गैर्वाणीम् Regd. 1948

# संस्कृतभाषाप्रचारिणी सभा

प्रधानकार्यालयः – चित्तूरु (आ. प्र.)

गौरवाध्यक्षः
श्री सर्वेपल्लि राधाकृष्णन्

कार्याध्यक्षः
श्री यं. अनन्तशयनमय्यङ्गार्

## संक्षिप्तपरिचयः

स्थापनम् – पार्थिववत्सरे (१९४५ ई.)

उद्देश्यम् – संस्कृतभाषायाः सरलरीत्या प्रचारेण व्यावहारिक-वैज्ञानिक-भाषात्वसम्पादनम् ।

सभापरीक्षाः – परिचयः, अभिज्ञः, विचक्षणः, समर्थः, कोविदः इति पञ्च ।

परीक्षाकालः – प्रतिवत्सरं द्विवारं—दक्षिणायने सिंहमासे, उत्तरायणे कुम्भमासे च ।

परीक्षाशुल्कम् – रू. १–५०, ३–००, ४-००, ६–००, १०-०० परीक्षाक्रमेण ।

परीक्षाकेन्द्रम् – यत्र पञ्चान्यूनाः परीक्षार्थिनः सन्ति तत्र सर्वत्र । अधुना शतपर्यन्तानि केन्द्राणि वर्तन्ते ।

सभ्यता – वार्षिकसभ्यो रू. १—४—० साधारणः ।
१०—०—० सहायकः ।

| | | |
|---|---|---|
| शाश्वतसभ्याः | १५—०—० | पोषकः । |
| | ५०—०—० | परिपोषकः । |
| | ११६—०—० | अभिवर्धकः । |
| | ५००—०—० | उद्धारकः । |
| | १११६—०—० | संस्थापकः । |

**अनुबन्धसभाः** – यत्र ग्रामे नगरे वा पञ्चविंशन्यूनाः सभ्याः सन्ति तत्र सर्वत्र अनुबन्धसभाः स्थाप्यन्ते । प्रकृते दशाधिकाः अनुबन्धसभाः विद्यन्ते । एतत्सभायाः प्रवृत्तिमुद्दिश्य एतदधिकं जिज्ञासुभिः संस्कृतभाषाप्रणयिभिः - "प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ. प्र.)" इति सङ्केतेन पत्रव्यवहारः कर्तव्यः ।

आर्याः ! संस्कृतभाषायाः प्रचुरप्रचारमपेक्षमाणा भवन्तोऽपि, एतत्सभायाः सभ्यतां स्वीकृत्य यथाशक्ति सभोद्देश्यसाधने सहकुर्युरिति प्रार्थयामहे ।

इत्थं,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री,



# राजाजीकथा ४९



## पामार्तः कुक्कुरः

**लेखकः – आ० वरदराजः**

काममुद्रे - न समुद्रे - ग्रामे रामकृष्णश्रेष्ठी महान् धनी। तस्मिन् ग्रामे अर्धस्य अर्धं, अर्धादधिकमेव वा, सस्यक्षेत्रं तदीयमेव। तस्य गृहमेकमेव तत्र प्रासादशोभया विराजमानं महत्सौधम्। शेषाणि सर्वाण्यपि शरणमात्राणि - उटजाः, कुटीराणि, पर्णशालाश्च।

  

तस्मिन् ग्रामे कुक्कुराः प्रचुराः। ते उच्छिष्टानि पत्राणि संलिह्यालिह्य जीवन्ति स्म। आप्रभातं रात्रिषु भषन्ति स्म। चोराः तन्मण्डले बहुलाः। परन्तु ते काममुद्रं ग्रामं सकृदपि न समायान्ति। कुक्कुराः परुषं भषेयुः; चौर्यं न सुलभमिति ते तं ग्रामं सर्वात्मनाऽत्यजन्। ग्रामेन्तरेषु काले काले यत्किञ्चित्सम्पादयन्ति स्म। इदं बहोः कालात् प्राक् प्रवृत्तमितिवृत्तम्। इदानीं तन्मण्डले चोरा नास्ति पर्यायाः सञ्जाताः।

  

कश्चित्पामार्तः कुक्कुरः सर्वदा श्रेष्ठिमहोदयस्य गृहांगणे वितर्दिकामधिशयानस्तस्थौ। श्रेष्ठिनः कनिष्ठपुत्रः स्वीयमुच्छिष्टपत्रं स्वयं गृहीत्वाऽऽनीय वीथ्यां क्षिपन्नास्त। तत्र मुष्टिपरिमितं अन्नमपि शेषयन्नास्त। पत्रलग्नं घृतस्नेहं अपि कुक्कुरः महता प्रमोदेन लिहन्नास्त। स तत्रैव

शयानः प्रतीक्षते स्म । श्रेष्ठिमहोदयैः तदनुचरैश्च बहु प्रयतितम् । तदुपरि शिलाखण्डान् विक्षिप्य प्रक्षिप्यापि तं दूरीकर्तुं न सफला बभूवुः । तत्समय एव सः "कुंय् कुंय् इति विलपन् पलायते । द्वारं पिधाय तेषु अन्तर्गतेष्वेव पुन स्स तत्रैवाऽगत्य तस्यामेव वितर्दिकायां शेते स्म ।

  

निम्नजातीयानां वर्गः कश्चित् (एरुकलवाल्लु - तेलुगु) तत्रागतः । ते दिवा वेणुशलाकाभिः पुटिकाः कटान् कुसूलविशेषांश्च अन्यान् रचयन्ति स्म । ते कुक्कुरैः साकं शनैः शनैः मैत्रीमकुर्वन् । इदानीं ते कुक्कुराः नैव भषन्ति; भषन्त्यपि वा शनैः शनै मन्द मन्दं घुर्घुरारावमात्रम् ।

  

तस्मिन् दिने अमावास्यायाः अतीतायाः तृतीयं दिनं अपतति; भानुवासरश्च । रात्रौ रोटिकाखण्डान् पुरतः प्रक्षिप्य कुक्कुरमुखानां पिधानं साधितं चौर्ये प्रवृत्तैस्तैः । कुक्कुरा नक्तं नैवाभषन् । कस्मिंश्चिद् गृहे भोजनपात्रद्वयं अपहृतम् । गुहान्तरे कुक्कुटान् निश्शब्दान विधाय गोण्यां न्यक्षिपन् । अन्ते श्रेष्ठिनो गृहसमीपमागताः । पामार्तः कुक्कुरः भषति स्म । रोटिकाखण्डः प्रक्षिप्तः । तथाऽपि स भषन्नेवाऽस्त । तस्य शब्दं श्रुत्वा निद्रोत्थितः श्रेष्ठी बहिरागतः । "अनेन दरिद्रेण निद्रा द्राविता-दूरीकृता इति सक्रोधं तं लगुडेन "दब दबा" ताडयामास । कुक्कुरः कुंय् कुंय् इति सकरुणं विलपन् पलायते स्म ततः । अनन्तरं श्रेष्ठी द्वारं पिधाय अन्तर्गतः शय्यां गतश्च । तथाऽपि न निद्रामुद्रितः । भार्यया सह भाषनुणः स्थितः । बहिर्लीनाः चोराः इतःपरं चौर्यं न सुकरमिति मत्वा ततः प्रस्थिताः ।

  

अन्येद्युः यथाप्रकारं श्रेष्ठिनः कनिष्ठपुत्रः स्वीयं उच्छिष्टपत्रं बहिरानीतवान्। कुक्कुरः पुच्छं चालयन् पुरस्समागतः।

"शेषू! त्वन्मूलमेव इदं कुक्कुरारामस्यं" इत्याहुः हस्तं प्रक्षालयन्तः श्रेष्ठिनः।

"अय्यो पापम्! पुच्छं चालयन्नायाति। तात! कुक्कुरव्रणस्य औषधं किमपि नास्ति वा?" इति पप्रच्छ शेषः।

"औषध मानीय तद्देहे लेपनं करोषीव। साधु रे साधु!! सम्यगस्ति तव वर्तनम्!" इति सोत्प्रासं साधिक्षेपं च प्राहुः श्रेष्ठिनः।

व्रणितेन पामार्तेन तेन कुक्कुरेण किं प्रयोजनमिति स चोरवर्गो जानाति; श्रेष्ठी किं जानाति?

  

आर्ता विषण्णाश्शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः।
संक्षेपयास्यामि ऋणाद्विमुक्ताः प्रेम्णा च भूम्ना सुखिनो भवन्ति॥



# सुभाषितानि

ले० श्री यन्. रामनाथार्यः



क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीप्यति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥ ३२७ ॥

Blows fall incessantly on the injured portion of the body, hunger increases alohg with decreases in prosperity, enmities increase durihg calamittes, misfortunes increase during difficult times.

जामाता जठरं जाया जातवेदा जलाशयः ।
पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः ॥ ॥ ३२८ ॥

These five never get filled up (or satisfied) One's son-in-low, stomach, wife, fire and the sea. (All begining with the letts 'Ja')

तावन्महत्त्वं पांडित्यं कुलीलत्वं विवेकिता ।
यावज्ज्वलति नांगेषु स्वतः पञ्चेषुसायकः ॥ ॥ ३२९ ॥

One's greatnes, erudition, lineage and discrimination, lasts only till he is not overcome by Cupid.

दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः ।
दुर्लभा सदृशी भार्या दुर्लभस्स्वजनः प्रियः ॥ ॥ ३३० ॥

An unaffected speech, a well disposed son, a worthy spouse, and an affectionate relation, these are very rarely met with.

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
स्वल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ॥ ३३१ ॥

Of the two, namely, death and poverty, death is more welcome than poverty; for, the death panges are shortlived whereas sufferings of poverty are long lasting.

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्नच कङ्कणेन ।
आभाति कायः करुणापराणां परोपकारेण न चन्दनेन ॥ ३३२ ॥

Ears shine by learning not by ear ornaments, hands by doing charity and not by bracelets, and the bodies of compassionate persons by doing good to others and not by applying sandal paste.

दिवा पश्यति नोलूकः काको नक्तं न पश्यति ।
अपूर्वः कोपि कामान्धः दिवा नक्तं न पश्यति ॥ ॥ ३३३ ॥

The owl does not see by day time and crow after darkness; it is strange indeed that a person blinded by love sees neither in daytime nor after sunset.

(सशेषम्)

# वन्दे भारतीं मातरम्

के, नागभूषणशर्मा

धर्म्याऽहिंसायुतवनजीवितां
अविरततपस्समार्जितशांतिसाधनां
धन्यां वदान्यगुणशोभितां
करुणावरुणालयां मातरं वन्दे भारतीम् मातरं ।
सत्यास्तेयगुणादर्शपथगामिनीं
सनातनादर्शनमसंस्कृतिनित्यनूतनां
अशेषजनसौख्यभाविनीं वन्दे भारतीं मातरम् ॥
सौभ्रात्र संविभाजितसकलसस्यफलसंचयां
समतासमादृतविदेशगतसारपारगां, पावनीं,
निजपदसेवापरायणपावनीं वन्दे भारतीं मातरम् ॥
चत्वारिंशत्कोटि कण्ठकलकलनिनादकराले
अशीतिकोटिसबलभुजैर्धृतखरकरवाले
सबलशौर्यधैर्या चेते, पशुपतिविहारगिरिविश्रुतात्मिके
त्वां नमामि भारतीं मातरम् ॥
अगणितनिगमगिखनिजविस्मयीकृतसखीद्वीपजनते
अविरतसुरभिळकुसुमफलवनविराजिते
अमरविहारमनोहरशैलकन्दरे
त्वां नमामि भारतीं मातरं वन्दे मातरम् ॥
भरतराजयशः पावितबिरुदांकिते
तृणीकृतप्रबलरिपुबलव्यूहरचनां, वन्दे
त्वां मातरं भारतीं वन्दे मातरम् ॥

## अण्डकुक्कुटीन्यायः - ८

"अवरः"

---

अयं न्यायः कार्यकारणभावापन्नं सन्निवेशं संदर्भं वा उपस्थापयति। तत्रापि यथा बीजांकुरन्यायः कार्यकारणभावं आवर्तनक्रमेण परस्पराश्रितं निरूपयति तथा अण्डकुक्कुटी न्यायोऽपि आवृत्त्यनुसारेण अन्योन्याश्रितं कार्यकारणभावं प्रदर्शयति । प्रथमावृत्तौ बीजादंकुरश्चेत्; द्वितीयावृत्तौ अङ्कुराद्बीजमिति रीत्या आवृत्तिनिबन्धनं अन्योन्याश्रितं कार्यकारणभावं आद्यन्तरहितं, दर्शयति बीजांकुरन्यायः। तद्वदयं अण्डकुक्कुटीन्यायोऽपि "अण्डात्कुक्कुटी, कुक्कुट्याः अण्डं" इति रीत्या अविच्छिन्नां कार्यकारण-परम्परां निरूपयति। तथा च यत्र यत्र कार्यकारणयोः पुनरावृत्तौ कार्यस्य कारणत्वं कारणस्य कार्यत्वमिति विपर्ययेण कार्यकारणभावः सिद्ध्यति तत्र सर्वत्रापि अण्डकुक्कुटीन्यायस्य प्रवेशः बीजांकुरन्यायस्येव भवतीति सिद्धम् ।

अथवा व्यक्ताव्यक्तयोर्मध्ये अव्यक्तात् व्यक्तस्यैव लोकव्यवहारो-पयोगितया प्राधान्यविवक्षया च अयं न्यायः प्रवृत्तः स्यात् । अत्रापि बीजांकुरन्याय एव दृष्टान्तः। स्थूलात् सूक्ष्मं, सूक्ष्मात् स्थूलमिति प्रवर्त-माने प्रवाहे लोकव्यवहारोपयोगि प्राधान्यं यथेष्यते तथैव अण्डकुक्कुटी-न्यायोऽपि। अण्डं बीजमिव अत्यल्पम्; कुक्कुटी अङ्कुरवत् महती । लोकव्यवहारे महतः किल प्राधान्यम्। अतः अण्डात् कुक्कुटी श्रेष्ठा। कारणात् कार्यस्य प्राधान्यं यत्र विवक्षितं तत्र अस्य न्यायस्य प्रसारः । कारणापेक्षया कार्यवैभवं अनन्तगुणं बहुमतं सम्मतं सुसिद्धं च। यथा-

क्वचित्पितर मतिशेते पुत्रः; क्वचिद्गुरुः शिष्यात्पराजितः। एवं अण्डात् कुक्कुटी निर्गता प्रभवति लोके व्यवहर्तुं; अण्डस्य तु व्यवहारकौशलं नाऽस्ति। "अण्डं कुक्कुटीं परिहसतीव" इत्यस्ति लोकोक्तिः। अण्डे सामर्थ्यं अनुद्भूतम्। कुक्कुट्यां तु तदुद्भूतम्। असमर्थः समर्थं चेदधिक्षिपेत् तर्हि अस्य अण्डकुक्कुटीन्यायस्य प्रयोगौचित्यं सिद्ध्यति। असमर्थ-समर्थन्यायस्यैव अण्डकुक्कुटीन्याय इति अपरं नाम इति मन्यताम्।

किंच, अण्डार्थमेव कुक्कुटीं रक्षन्ति। "यावत्प्रयोजनं तावद्रक्षणं, तदुपरि भक्षणम्" इत्यर्थेऽपि अस्य न्यायस्य प्रवेशः। महाभाष्यकारोऽप्यमुं अंशं द्रढयति - "न हि कुक्कुट्याः पूर्वो भागः शाकाय अपरश्चाण्डाय" इति। उभयविधप्रयोजनमध्ये एकतरस्यैव सिद्धिरित्यगतिकत्वे यद्यावत् सिद्ध्यति तत्तावत्पर्यन्तं साधय, तदुपरि शिष्टं स्वतः सिद्ध्यति इति भावः। "यावदण्डप्रदानं कुक्कुटी संरक्षणं, तदुपरि तद्भक्षणं न क्षतये" इति तात्पर्येणाऽपि अस्य न्यायस्य प्रयोगः समुचितः।

लोकव्यवहारमनुसृत्य "अण्डं कुक्कुटीं परिहसतीव" इत्यस्मिन्नर्थे एव अस्य न्यायस्य प्रयोगबाहुल्यमिति मतम्।

——:●:——

# द्वारकावर्णनम्

रचयिता – कन्दाळ वेङ्कटरामकृष्णमाचार्यः

---

श्रीवागीनिलयाद्युपेन्द्रपरमक्रीडाविहारालया
रङ्गत्तुङ्गतरङ्गघोषकलितेनाम्बोधिना वेष्टिता ।
भूवैकुण्ठमिव स्थिता त्रिदशयोगीन्द्रादिभिः सेविता
सौभाग्यादिसमन्विता विजयते श्रीद्वारकाख्या पुरी ॥ ॥ १ ॥

यामङ्के प्रणिधाय वारिनिधिरप्युत्तुङ्गवीचीकरैः
पुत्रीभावसमन्वितस्समधिकप्रेम्णा पुरश्रीतनुम् ।
स्पृष्ट्वा तामनुलालयन्नपि जनैर्नाभूद्विमृष्टस्तदा
माभूदेव हि कीदृशोऽपि जनके दोषैकदर्शी जनः ॥ ॥ २ ॥

संपत्तिप्रकरादिभिः सुरुचिरैस्संशोभिता सा पुरी
ह्यात्मौपम्यविवादनार्थमलकां संबोधयन्तीव तत् ।
नाकं स्वर्णनिशान्तशाणिततिभिः संगृह्य ताराश्रयम्
सौधाग्रस्थितभूरिपौरजनतासंलापमर्यादया ॥ ॥ ३ ॥

नटदुत्तुङ्गतरङ्गरञ्जितमहोग्राढ्याम्बुवारेण सं-
वलितश्चोच्चतगातिदीर्घघनसालश्च कैलासोपमः ।
सभमादेत्य बलाहकोऽपि सहसा येनैव रुद्धो रसन्
सलिलासेकमिषेण रोदनपरोभून्नष्टवीर्यो बहिः ॥ ॥ ४ ॥

कल्लोलप्रकरान्विते महति चाब्धौ स्वर्णशोभान्विता
ह्याशाः पिङ्गळवर्णकाः विदधती प्राकारसंवेष्टिता ।
या पूर्वारि विभज्य सुत्थितमहौर्वाग्नीव संशोभते
नाकं स्वप्रभया हसन्निव वरीवर्त्युच्चसौधैस्सदा ॥ ॥ ५ ॥

स्वनदुग्राम्बुधिनिस्वनादिकलनाज्ञातप्रकोपा पुरी
ध्वनिना जेतुमिवार्णवं विदधते झङ्कारगीतान्वितम् ।
भ्रमरालि पिककीरसारसविहङ्गादिव्रजं सस्वनम्
मकरन्दप्रकारान्वितानिलचयं चारामसीमासु या ॥ ॥ ६ ॥

चातुर्याप्तसमस्तवेदनिचयाः षड्दर्शनीपारगाः
वेदोद्गीतनिरीहकर्मनिरताः सप्तर्षिभिस्सेविताः ।
चेतोनामविलोचनेक्षितमहावैकुण्ठनारायणाः
भूदेवा विलसन्ति यत्र विबुधैस्सर्वैस्सदा पूजिताः ॥ ॥ ७ ॥

उद्यद्दोस्तम्भजृम्भद्घनपरिघगदाखड्गचक्रादिशस्त्रा-
भ्यामर्दोद्भूतदिव्यव्रणकिणविलसच्छ्रीजयांकांकितांगाः ।
दानप्रौढ्याप्तकीर्तिप्रकरजितमहाकल्पवृक्षा महान्त-
श्चाभूषाभूषितांगाः धरणिधवसुताः सन्ति यत्रोज्वलांगाः ॥ ॥ ८ ॥

पित्रोपार्जितनाशहीनभवनान्तर्गुप्तलक्ष्मीयुताः
यस्यां वृत्तिसमन्वितास्समधिकां संपत्तिमाप्तास्सदा ।
श्रद्धाभक्तियुता द्विजेषु विपणिं चापूर्य धान्यादिभिः
यक्षेशं विहसेयुरूरुजवराः लक्ष्मीभिरुल्लासिताः ॥ ॥ ९ ॥

यस्यां शास्त्रनियोगपूर्वक मथाभ्यर्च्य द्विजातिं सदा
ह्यक्षय्यैर्गृहवैभवै स्समधिकं शूद्रा स्समुल्लासिताः ।
यस्यामश्वचयान्हि वीक्ष्य सुभगानुच्चैश्श्रवो लज्जते
हेषाध्वानजिताश्च सूर्यतुरगाः येषां हि धावन्त्यपि ॥ ॥ १० ॥

मुष्टिग्राह्यसुमध्यमाः सुजघनाः रम्याधरा यत्र हि
श्रीसंशोभितहासयुक्तवदनाः याने करेणूपमाः ।
पीनोत्तुङ्गपयोधरा स्सुकबरीभारांचिताश्चांगनाः
आकर्णान्तविलोचनाश्च गणिकाः जारश्रियो हारिकाः ॥ ॥ ११ ॥

सर्वे धर्मपरायणाश्च ललितास्सर्वे कृपासंपदः
सर्वे वेदसुगीतकर्मनिरताः सर्वेनघाः पावनाः ।
तत्वज्ञानसमन्विताश्च विलसन्त्युद्दीपितप्राभवाः
यस्यां सात्विकभावसम्मिळितसद्भावाः जनास्सत्पथाः ॥ ॥ १२ ॥

देवश्श्रीहरिरप्रतीपसुषमासम्मोहिनीभिः सदा
ह्यष्टाभिर्महिषीभिरुज्वलतरैर्गोपीगणैश्चान्वितः ।
सौधोद्यानतटाकसैकतसरःप्रांतेषु रत्युत्सवैः
श्वेतद्वीपमतीव शोभयति सौख्याद्यन्वितश्चोज्वलैः ॥ ॥ १३ ॥



## साधारणवत्सर दक्षिणायन (सेप्टम्बर) परीक्षाणां

## कार्यक्रमः

| विलम्बशुल्कं विना आवेदनपत्राणां प्रापण-तिथिः | विलम्बशुल्केन साकं आवेदनपत्राणां प्रापण तिथिः | परीक्षातिथयः |
|---|---|---|
| 20—7—1970 | 31—7—1970 | सेप्टम्बरमासे 5, 6, 7 तिथयः |

आवेदनपत्राणि 20 पैसकपोस्टलचीटिका प्रेषणे विना मूल्यं लभ्येरन् । शुल्करहितानि आवेदनपत्राणि निराक्रियेरन् । उत्तरपरीक्षाभ्यर्थिभिः पूर्वोत्तीर्णपरीक्षायां स्वसंख्या, वत्सरश्च अवश्यं लेखनीयौ ।

इति

सं. भा. प्र. सभा, 15—6—70.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

——:०:——

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.

*R. N. 8145/60.* *Postal R. No. H. 493*

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् रू. ४-००



## प्रहेलिके

मोमारामममा दंद्वे हयागदलनंभषः ।
यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥

अर्थः - (प्रथमपादाक्षराणां द्वितीयपादाक्षरैः सह क्रमेणान्वयः) मोहः, माया, रागः, मदः, मलः, मानं, दम्भः, द्वेषः इति एतानि दूषणानि यस्य न विद्यन्ते स उत्तमगतिं लभते ।

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥

अर्थः - हे भूपाल ! तव चेष्टितं कीर्तिरित्यर्थः; अत्रिणः तन्नामकस्य महर्षेः, लोचनात् संभूतं ज्योतिः चन्द्रः, तस्मादुद्गमः यासां ताः चन्द्रिका इत्यर्थः । ताभिः भासन्ते इति कुमुदानि, तैः सदृशं समं धवलं, अत्यर्थं शोभते ॥



Published by Sri N Ramanatha Iyer B A.; B. L Advocate
& Secretary S, B. P. Sabha, Chittoor (A. P )
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P·) C 1500